तिष्यस्तीव्रेण वीर्यस्य धीसमाध्योरनन्तरम् ।
पुण्यं क्रियाच तद्वस्तु त्रयं कर्मपथा यथा ॥ ११२ ॥
दीयते येन तद्दानं पूजानुग्रहकामया ।
कायवाक्कर्म सोत्थानं महाभोग्यफलं च तत् ॥ ११३ ॥
स्वपरार्थोभयार्थाय नोभयार्थाय दीयते ।
तद्विशेषः पुनर्दातृवस्तुक्षेत्रविशेषतः ॥ ११४ ॥
दाता विशिष्टः श्रद्धाद्यैः सत्कृत्यादि ददात्यतः ।
सत्कारोदाररुचिता कालानाच्छेद्यलाभिता ॥ ११५ ॥
वर्णादिसम्पदा वस्तु सुरूपत्वं यशस्वि वा ।
प्रियता सुकुमारर्तुसुखस्पर्शाङ्गता ततः ॥ ११६ ॥
गतिदुःखोपकारित्वगुणैः क्षेत्रं विशिष्यते ।
अग्र्यं मुक्तस्य मुक्ताय बोधिसत्त्वस्य चाष्टमम् ॥ ११७ ॥
मातापितृग्लानधार्मकथिकेभ्योऽन्त्यजन्मने ।
बोधिसत्त्वाय चामेया अनार्येभ्योऽपि दक्षिणाः ॥ ११८ ॥
पृष्ठं क्षेत्रमधिष्ठानं प्रयोगश्चेतनाशयः ।
एषां मृद्वधिमात्रत्वात् कर्ममृद्वधिमात्रता ॥ ११९ ॥
सञ्चेतनसमाप्तिभ्यां निष्कौकृत्यविपक्षतः ।
परिवाराद् विपाकाच्च कर्मोपचितमुच्यते ॥ १२० ॥
चैत्ये त्यागान्वयं पुण्यं मैत्र्यादिवदगृह्णति ।
कुक्षेत्रेऽपीष्टफलता फलबीजविपर्ययात् ॥ १२१ ॥
दौःशील्यमशुभं रूपं शीलं तद्विरतिर्द्विधा ।
प्रतिक्षिप्ताच्च बुद्धेन विशुद्धं तु चतुर्गुणम् ॥ १२२ ॥
दौःशील्यतद्धेत्वहतं तद्विपक्षसमाश्रितम् ।
समाहितं तु कुशलं भावना चित्तवासनात् ॥ १२३ ॥
स्वर्गाय शीलं प्राधान्याद् विसंयोगाय भावना ।
चतुर्णां ब्राह्मपुण्यत्वं कल्पं स्वर्गेषु मोदनात् ॥ १२४ ॥
धर्मदानं यथाभूतं सूत्राद्यक्लिष्टदेशना ।
पुण्यनिर्वाणनिर्वेधभागीयं कुशलं त्रिधा ॥ १२५ ॥
योगप्रवर्तितं कर्म ससमुत्थापकं त्रिधा ।
लिपिमुद्रे सगणनं काव्यं संख्या यथाक्रमम् ॥ १२६ ॥
सावद्या निवृता हीनाः क्लिष्टा धर्माः शुभामलाः ।
प्रणीताः संस्कृतशुभाः सेव्या मोक्षस्त्वनुत्तरः ॥ १२७ ॥